महत्कांशुः कालेन महता विभुः । अब्रवीद्वत्स ! भद्रं ते वरं वरय सुव्रत ! । सोऽब्रवीद्यदि मे तुष्टो भगवान् लोकादीधिते ! । प्रौढत्वं सर्वकार्य्येषु जायतां सम्प्रति त्वया । तत् तथेति प्रतिज्ञातं सूर्य्येण वरवर्णिनि ! । ततः सर्वज्ञतां प्राप्य चित्रोमित्रकुलोद्भवः । तं ज्ञात्वा धर्म्मराजस्तु बुद्ध्या परमया युतः । चिन्तयामास मेधावी लेखकोऽयं भवेद्यदि । जाता मे सर्वसिद्धिश्च निर्वृतिश्च परा भवेत् । एवं चिन्तयतस्तस्य धर्म्मराजस्य भामिनि ! । चित्रोऽपि तीर्थे गतश्चैव स्नानार्थं लवणाम्बसि । स तत्र प्रविशन्नेव नीतस्तु धर्मकिङ्करैः । सशरीरो महादेवि ! यमादेशपरायणैः । स चित्रगुप्तनामाभूत् विचित्रचरित्रलेखकः । चित्रादित्येति नामास्य ततो लोके वरानने ! । सप्तम्यां नियताहारोयस्तं पूजयते नरः । सप्त जन्मानि दारिद्र्यं न दुःखं तस्य जायते" ।

**चित्रघण्टा** स्त्री चित्रा घण्टाऽस्याः । काशीस्थे देवीभेदे "चित्रे ! विचित्रे ! विश्वभुजे । नमोऽस्तु ते श्रीचित्रघण्टे ! विकटे सुदंष्ट्रिके !" काशी० ५अ० ।

**चित्रघण्टेशी** स्त्री काशीस्थे देवीभेदे । "दृश्या चित्रघण्टेशी घण्टाकर्णह्रदं ह्रदः" काशीख० ३३अ० ।

**चित्रचाप** पु० धृतराष्ट्रपुत्रभेदे "अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ" भा० आ० ६७अ० ।

**चित्रजल्प** पु० उज्ज्वलमणयुक्ते वाक्यभेदे तल्लक्षणभेदादिकं तत्रोक्तं यथा
"प्रेष्ठस्य सुहृदा लोके गूढरोषाभिजृम्भितः । भूरिभावमयोजल्पो यस्तीव्रोत्कण्ठतान्वितः । चित्रजल्पो दशाङ्गोऽयं प्रजल्पः परिजल्पितम् । विजल्पो ज्वल्पसंजल्पावयजल्पोऽभिजल्पितम् । आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्त्तिताः । एष भ्रमरगीताख्योदशमे प्रकटीकृतः । असंख्यभाववैचित्रीचमत्कृतिसुदुस्तरः । अपि चेच्चित्रजल्पोऽयं मनाक् तदपि कथ्यते । तत्र प्रजल्पः १ । असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया । प्रियस्य कौशलोद्गारः प्रजल्पः स तु कीर्त्त्यते १ । यथा मधुप ! कितवबन्धो ! मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः । वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् । १ । अथ परिजल्पितम् २ । प्रभोर्निर्दयताशाठ्यचापल्याद्युपपादनात् । स्वविचक्षणताव्यक्तिर्भङ्ग्या स्यात् परिजल्पितम् २ । यथा सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यो तत्यजेऽस्मान् भवादृक् । परिचरति कथं तत् पादपद्मं तु पद्मा अपि बत हृतचेता उत्तमश्लोकजल्पैः २ । अथ विजल्पः ३ । "व्यक्तयाऽसूयया गूढमानमुद्रान्तरालया । अघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः ३ । यथा किमिह बहु षडङ्घ्रे ! गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् । विजयसखसखीनां गीयतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः । ३ । अथोज्जल्पः ४ । हरेः कुहकताख्यानं गर्वगर्भितयेर्ष्यया । सासूयश्च तदाक्षेपो धीरैरुज्जल्प ईर्य्यते ४ । यथा दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः । चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः । ४ । अथ संजल्पः ५ । सोल्लुण्ठया गहनया कयाप्याक्षेपमुद्रया । तस्याकृतज्ञताद्युक्तिः संजल्पः कथितो बुधैः ५ । यथा विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् । स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किन्नु सन्धेयमस्मिन् ५ । अथ अवजल्पः ६ । हरौ काठिन्यकामित्वधौर्त्त्यादासक्त्ययोग्यता । यत्र सेर्ष्यं भियेवोक्ता सोऽवजल्पः सतां मतः ६ । यथा मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् । बलिमपि बलिमत्त्वा वेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ६ । अथाभिजल्पितम् ७ भङ्ग्या त्यागौचितं तस्य खगानामपि खेदनात् । यत्र सानुशयं प्रोक्तं तद्भवेदभिजल्पितम् । यथा यदनुचरितलीला कर्णपीयूषविप्रुट् सकृददनविधूतद्वन्द्वधर्मा विनष्टाः । सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इव विहङ्गा भिक्षुचर्य्यां चरन्ति । ७ । अथ आजल्पः ८ । जैह्म्यं तस्यार्त्तिदत्वञ्च निर्वेदाद्यत्र कीर्त्तितम् । भङ्ग्यान्यसुखदत्वञ्च स आजल्प उदीरितः । यथा वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः । ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन् ! भण्यतामन्यवार्त्ता । ८ । अथ प्रतिजल्पः ९ । दुस्त्यजद्वन्द्वभावेऽस्मिन् प्राप्तिर्नार्हेत्युद्धतम् । दूतसंमाननेनोक्तं यत्र स प्रतिजल्पकः । प्रियसख ! पुन-

रागाः प्रेयसा प्रेषितः किं वरय किमनुरक्तो मानभीरोऽसि मेऽङ्ग । नयसि कथमिहार्य्यान् दुस्त्यज द्वन्द्वपार्श्वं सततमुरसि सौम्य ! श्रीवधूः साकमास्ते । ९ । अथ सुजल्पः १० यत्रार्जवात् सगाम्भीर्य्यं सदैन्यं सह चापलम् । सोत्कण्ठञ्च हरिः पृष्टः स सुजल्पो निगद्यते । यथा—अपि बत मधुपुर्य्यामार्य्यपुत्रोऽधुनास्ते स्मरति स पितृगेहान् सौम्य ! बन्धूंश्च गोपान् । क्वचिदपि स कथां नः किङ्करीणां गृणीते भुजमगुरुसुगन्धं मूर्द्ध्न्यधास्यत् कदा नु" १० ।

**चित्रतण्डुल** न० चित्रस्तण्डुलोऽस्य । विडङ्गे रत्नमाला । तत्रार्थे स्त्री अमरः ।

**चित्रत्वच्** पु० चित्रा त्वक् यस्य । भूर्जत्वचे । राजनि० ।

**चित्रदण्डक** पु० चित्रोदण्डःकाण्डो यस्य कप् । (ओल) सूरणे रत्नमाला ।

**चित्रदीप** पु० पञ्चदशीप्रकरणान्तर्गते दीपभेदे "यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम् । परमात्मनि विज्ञेयं तथावस्थाचतुष्टयम् । यथा धौतो घट्टितश्च लाञ्छितो रञ्जितः पटः । चिदन्तर्य्यामिसूत्राणि विराड्‌ात्मा तथेर्य्यते । स्वतः शुभ्रोऽत्र धौतः स्याद्घट्टितोऽन्नविलेपनात् । मस्याकारैर्लाञ्छितः स्यात् रञ्जितो वर्णपूरणात् । स्वतश्चिदन्तर्यामी तु मायावी सूक्ष्मसृष्टितः । सूत्रात्मा स्थूलसृष्ट्यैव विराडित्युच्यते परः । ब्रह्माद्यास्तम्बपर्य्यन्ताः प्राणिनोऽत्र जडा अपि । उत्तमाधमभावेन वर्त्तन्ते पटचित्रवत् । चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक् । चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः । पृथक् पृथक् चिदाभासाश्चैतन्याध्यस्तदेहिनाम् । कल्प्यान्तजीवनामानो बहुधा संसरन्त्यमी । वस्त्राभासा स्थितान् वर्णान् यद्वदाधारवस्त्रगान् । विदन्त्यज्ञास्तथा जीवं संसारं चिद्गतं विदुः" इत्युपक्रमे । "जगच्चित्रं स्वचैतन्ये पटे चित्रमिवार्पितम् । मायया तदुपेक्ष्यैव चैतन्यम् परिशिष्यताम् । चित्रदीपमिमं नित्यं ये तु संदधते बुधाः । पश्यन्तोऽपि जगच्चित्रं ते मुह्यन्ति न पूर्ववत्" पञ्चदशी ।

**चित्रदेवी** स्त्री चित्रं दीव्यति दिव-अच् गौरा० ङीष् । १महेन्द्रवारुण्यां राजनि० । २कुमारानुचरभेदे पु० "तुहरश्च तुहारश्च चित्रदेवश्च वीर्य्यवान्" भा० शल्य० ४६अ० । कुमारानुचरोक्तौ

**चित्रधर्म्मन्** पु० भारतप्रसिद्धे नृपभेदे "विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः । चित्रधर्म्मेति विख्यातः क्षितावासीत् स पार्थिवः" भा० आ० ६७अ० ।

**चित्रनेत्रा** स्त्री चित्रं नेत्रं यस्याः । शारिकायां हारा० ।

**चित्रपक्ष** पुंस्त्री चित्रौ पक्षावस्य । तित्तिरिखगे जटाधरः । स्त्रियां ङीष् । "चित्रपक्षः कफहरः वातघ्नो ऽथ ग्रहणीप्रणुत्" भावप्र० तन्मांसगुणा उक्ताः ।

**चित्रपट** पु० कर्म्म० । (छिट) प्रख्याते १वस्त्रे शब्दार्थचि० । २चित्राधारपटे पु० चित्रदीपशब्दे उदा० "निःशेषं दृष्णिसैन्यं तु स्थितं चित्रपटे यथा" हरिवं० ११७अ० ।

**चित्रपत्त्र** पु० चित्रं पत्त्रं पक्षोऽस्य । चित्रपक्षे खगमात्रे "चित्रपत्त्रशकुनिनीडद्योतितेत्यादि" काद० ।

**चित्रपत्त्रिका** स्त्री चित्रं पत्त्रं पर्णं यस्याः कप् कापि अतइत्त्वम् । १चित्रपर्ण्यौषधौ रत्नमाला २द्रोणपुष्प्यां राजनि० कबभावे गौरा०ङीष् । चित्रपत्त्री जलपिप्पल्यां स्त्री राजनि० ।

**चित्रपथा** स्त्री प्रभासतीर्थस्थचित्रानद्याम् तत्कथा स्क० पु० प्रभा० यथा

"ततोगच्छेन्महादेवि ! नदीं चित्रपथां शुभाम् । ब्रह्मकुण्डसमीपस्थां चित्रादित्यस्य मध्यतः । यदा चित्रस्तु संनीतो यमदूतैः सुरप्रिये ! । सशरीरः महाप्राज्ञो यमादेशपरायणैः । एवं ज्ञात्वा तु तत्रस्था भगिनी तस्य दुःखिता । चित्रा, नदी ततोभूत्वा तथा तस्य महात्मनः । प्रविष्टा सागरे देवि ! अन्विषन्तीव बान्धवम् । ततश्चित्रपथानाम तस्यास्त्वक्रुर्द्विजातयः । एवं तत्र समुत्पन्ना सा नदी वरवर्णिनि ! । तस्यां स्नात्वा नरोयस्तु चित्रादित्यं प्रपश्यति । स याति परमं स्थानं यत्र देवो दिवाकरः । अस्मिन् कलियुगे देवि ! अन्तर्द्धानं गता नदी । प्रावृट्कालेऽथ दृश्येत दुर्लभं तत्र दर्शनम् । स्नानं दानं विशेषेण सर्वपातकनाशनम् । भक्तोवाप्यथ वाऽभक्तो रात्रौ वा यदि वा दिवा । पर्वकालेऽथवाऽकाले पवित्रोऽप्यथ वाऽशुचिः । यदैव दृश्यते तत्र नदी चित्रपथा प्रिये ! । प्रमाणं दर्शनं तस्या न कालस्तत्र कारणम् । दृष्ट्वा नदीं महादेवि ! पितरः स्वर्गसंस्थिताः । गायन्ति तत्र वाञ्छन्ति नृत्यन्ति च हसन्ति च । अस्माकं वंशजः कश्चित् श्राद्धमत्र करिष्यति । यावत् कल्पं तथास्माकं प्रीतिस्तत्पादयिष्यति । एवं ज्ञात्वा नरस्तत्र स्नानं श्राद्धञ्च कारयेत् । सर्वपापविनाशार्थं पितॄणां प्रीतये तथा ।

इत्येतत् कथितं देवि ! यथा चित्रपथा नदी । प्रभास-क्षेत्रमासाद्य संस्थिता पापनाशिनी” ।

**चित्रपदा** स्त्री चित्रं पदं स्वाधिष्ठानस्थानं यस्याः । १गोधा-लतायां शब्दमा० अष्टाक्षरपादके २छन्दोभेदे च । तल्लक्षणं “चित्रपदा यदि भौ गौ” छन्दोम० । आश्चर्य्यं पदं शब्दभेदोऽत्र । ३चित्रपदयुक्ते वाक्यादौ त्रि० । “वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनी तथा वचः” भा०व० ३१अ० । “सप्त यदा भगणाः परतो गुरुरन्त्यगतो लघु-कार्जितदेश ! चित्रपदेति तदा युधि विक्रमतो हृत-वैरिधराधिपकेश ! । सा कथिताधिकमङ्गल ! पिङ्ग-लनागवरेण दयाभिनिवेश ! गौडकुलोज्ज्वल ! धारय चेतसि हे यशवन्त ! नरेश !” वृत्तरत्नोक्ते ४छन्दोभेदे च

**चित्रपर्णी** स्त्री चित्राणि पर्णान्यस्याः । (चाकुलिया) ख्याते पृश्निपर्ण्याम् अमरः । २जलपिप्पल्यां ३द्रोणपुष्प्यां च राजनि० । ४मञ्जिष्ठायां रत्नमाला । स्वार्थे क । चित्र-पर्णिका चित्रपर्णीभेदे रत्नमाला ।

**चित्रपादा** स्त्री चित्रौ पादौ यस्याः । शारिकायां हारा० ।

**चित्रपिच्छक** पुंस्त्री चित्रं पिच्छमस्य । मयूरे राज-नि० स्त्रियां ङीप् ।

**चित्रपुङ्ख** पु० चित्रः पुङ्खोऽस्य । शरभेदे राजनि० ।

**चित्रपुष्पी** स्त्री चित्राणि पुष्पाण्यस्याः ङीप् । अम्बष्ठा-लतायाम् राजनि० । [वली स्त्रियां ङीप् ।

**चित्रपृष्ठ** पुंस्त्री० चित्रं पृष्ठमस्य । कलविङ्कपक्षिणि । हारा-

**चित्रफल** पु० चित्रं फलं फलकमिवाकारोऽस्त्यस्य अच् । (चितल) मत्स्ये राजनि० । स्वार्थे क । चित्रफलक तत्रार्थे ।

**चित्रफला** स्त्री चित्रं फलं यस्याः अजा० टाप् । १चि-र्भट्यां २मृगेर्वारौ ३लिङ्गिन्यां ४महेन्द्रवारुण्याम् ५वार्त्ताक्यां ६कण्टकार्य्याञ्च राजनि० । एतासां चित्र-फलत्वात्तथात्वम्

**चित्रबर्ह** पुंस्त्री चित्रा बर्हा यस्य । १मयूरे स्त्रियां जाति-त्वात् ङीप् । “काकोनेमांश्चित्रबर्हान् शार्दूलान् क्रोष्टु-केन च । क्रोशतोऽद्य पाण्डवान् राजन् ! मा मज्जीः शोकसागरे” भा०स०६०अ० । २गरुडात्मजभेदे । “सुमु-खश्चित्रकेतुश्च चित्रबर्हस्तथाऽनलः” भा० उ० १००अ० । गरुडात्मजोक्तौ । [६७अ० । तत्पुत्त्रोक्तौ ।

**चित्रबाहु** पु० धृतराष्ट्रपुत्रभेदे । चित्रबाहुश्चित्रवर्मा” आ०

**चित्रभानु** पु० चित्रा भानवो यस्य । १अग्नौ २सूर्य्ये, ३चित्रकवृक्षे, ४अर्कवृक्षे च मेदिनिः । ५भैरवे शब्द-रत्ना० । तत्राग्नौ “पुष्पैः शिरोभिश्च भयं चित्रभानुं पर्य्यैदिरे” भा० आ० ५२अ० सर्पसत्रे । “किन्त्विमे मानवाः सर्वे दह्यन्ते चित्रभानुना” भा०शा० २२६अ० । ६अश्विनीकुमारयोः द्वि० व० । तयोश्चित्रभानुसूर्य्य-जातत्वात् तथात्वम् “प्रपूर्वगापूर्वजौ चित्रभानू” भा० आ० ६०अ० अश्विनोःस्तुतौ । प्रभवादिषष्टिवर्षेषु ७षोडशे वर्षे “चणका मुद्गमाषाश्च अन्यच्च द्विदलं प्रिये ! । महार्घं जायते सर्वं चित्रभानौ वरानने !” । “षोडशं चतुर्थस्य (हौताशस्य) युगस्य पूर्वं यच्चित्रभानुं कथयन्ति वर्षम्” वृ० स० ८अ० ।

**चित्रभेषजा** स्त्री चित्रमाश्चर्य्यं भेषजं यस्याः ५ब० । काको-दुम्बरिकायाम् राजनि० ।

**चित्रमण्डल** पुंस्त्री० चित्रं मण्डलमस्य । मण्डलिनि सर्प-भेदे सुश्रुतः अहिशब्दे ५८१पृ० दृश्यम् ।

**चित्रमृग** पु० चित्रवर्णो मृगः । पृषते मृगभेदे शब्दार्थ-चिन्ता० । “षण्मासांश्छागमांसेन पार्षतेन च सप्त वै” मनुव्या० “पृषतश्चित्रमृगः” कुल्लू० ।

**चित्रमेखल** पुंस्त्री चित्रा मेखलास्य । मयूरे त्रिका० ।

**चित्रयोधिन्** त्रि० चित्रं युध्यति युध–णिनि । १आश्चर्य्य-युद्धकारके स्त्रियां ङीप् । “यदा द्रोणो विविधानस्त्रमा-र्गान् निदर्शयन् समरे चित्रयोधी” भा० आ० १अ० । “विरूपाक्षश्च दैतेयश्चित्रयोधी महासुरः” भा० आ० ६७अ० । २अर्ज्जुने तन्नामनामके ३अर्ज्जुनवृक्षे पु० राजनि० ।

**चित्ररथ** पु० चित्रो रथोऽस्य । १सूर्य्ये २गन्धर्वभेदे च मेदि० । स च गन्धर्वः कश्यपात् मुनिनाम्न्यां दक्षकन्यायां बभूव यथाह “भीमोग्रसेनौ चेत्युपक्रमे “भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी” इत्युपक्रमे “इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिताः” भा० आ० ६५अ० । इत्युक्तम् स च अङ्गारपर्णनामा अर्ज्जुनेन च तस्य दग्धरथ-त्वात् दग्धरथनामा बभूव यथाह भा० आ० १७०अ० । “गन्धर्व उवाच, “जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गार-पर्णताम् । न च श्लाघ्ये बलेनाङ्ग नाम्नाद्य जनसं-सदि । साध्विमं लब्धवाँल्लाभं योऽहं दिव्यास्त्रधारिणम् । गान्धर्व्या माययेच्छामि संयोजयितुमर्ज्जुन ! । अस्त्रा-ग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः । सोऽहं चित्र-रथो भूत्वा नाम्ना दग्धरथोऽभवम्” ।

"गन्धर्वाणां चित्ररथः" गीता। "सागराणां नदीनाञ्च मेघानां वर्षितस्य च। गन्धर्वाणामधिपतिं चक्रे चित्ररथं विभुः" हरिवं० ४ अ०। तस्य गन्धर्वाधिपत्य कृतम्। २नदीभेदे स्त्री ३उषङ्गोः पुत्रे पु० चैत्ररथिशब्दे दृश्यम्। चित्ररथमधिकृत्य कृतो ग्रन्थः अण्। चैत्ररथ भारतस्यादिपर्वान्तर्गतेऽवान्तरपर्वणि। तच्च पर्व आदिपर्वणि १६५ अवधि १८२ अध्यायपर्य्यन्तम्।

**चित्ररश्मि** त्रि० चित्रा रश्मयोऽस्य। १नानावर्णरश्मियुक्ते २मरुद्गणभेदे पुं हरिवं० २०४ अ० "अग्निवर्णु-हविर्ज्योतिः सावित्रं मित्रमेव च। अमरं शरवृष्टिञ्च सङ्कल्पञ्च महाभुजम्। विरजञ्चैव शुक्रञ्च विश्वावसुविभावसू। अश्मन्तश्चित्ररश्मिश्च तथा निष्कुषितं नृपम्। वसुधस्वाङ्कुतिश्चैव चारित्रं मधुपावनम्। हृहन्तञ्च हहूरूपं तथैव परतापनम्। महत्वती तथा यत्र एतं वै मरुतां गणम्"।

**चित्ररेफ** पु० शाकद्वीपाधिपस्य प्रैयव्रतस्य मेधातिथेः १पुत्रभेदे तन्नामके तत्कृते २वर्षभेदे च। शाकद्वीपोपक्रमे "तस्यापि प्रैयव्रत एवाधिपतिः नाम्ना मेधातिथिः। सोऽपि विभज्य सप्त वर्षाणि पुत्रनामाङ्कितेषु स्वात्मजान् पुरोजवमनोजव पवमान धूम्रानीक चित्ररेफ बहुरूप विश्वाधार संज्ञान् निधाप्याधिपतीन् स्वयं भगवत्यनन्त आवेशितमतिस्तपोवनं प्रविवेश" भाग० ५।१२।१८।

**चित्रल** पु० चित्रमाश्चर्य्यं लाति ला—क। १कर्वूरवर्णे २तद्वति त्रि० शब्दरत्ना०। ३गोरक्षीवृक्षे स्त्री राजनि०।

**चित्रलता** स्त्री० नित्यकर्म्म०। मञ्जिष्ठायां राजनि०।

**चित्रलेखनी** स्त्री चित्रं लिख्यतेऽनया लिख ल्युट् करणे ङीप्। (तुली) कूर्च्याम्। उज्ज्वलद०।

**चित्रलेखा** स्त्री चित्रं लेखयति लिख—णिच् अण् उप०स०। १बाणासुरमन्त्रिणः कुष्माण्डस्य कन्यायाम् २अप्सरोभेदे च। तस्याश्च चित्रलेखनदक्षता हरिवं० १७६ अ० वर्णिता यथा "उषायावचनं श्रुत्वा रामा वाक्यमिदं पुनः। उवाच रुदतीञ्चैव कुष्माण्डतनया सखी। कुशला ते विशालाक्षि! सर्व्वथा सन्निविग्रहे। अप्सरा चित्रलेखा ते क्षिप्रं विज्ञाप्यतां सखि!। अस्याः सर्व्वमशेषं वै त्रैलोक्यं विदितं सदा। एवमुक्ता तदैवोषा हर्षेणागतविस्मया। तामप्सरसमानाय्य चित्रलेखां सखीं प्रियाम्। कृताञ्जलिपुटा दीना उषा वचनमब्रवीत्। परमं शृणु मे वाक्यं यत्त्वां वक्ष्यामि भाविनि!। भर्त्तारं यदि मेऽद्य त्वं मानयिष्यसि मत्प्रियम्। कान्तं पद्मपलाशाक्षं मत्तमातङ्गविक्रमम्। त्वय्याख्यास्ये प्रियान् प्राणांस्तत कमललोचने!। चित्रलेखाऽब्रवीद्वाक्यमुषां हर्षवती शनैः। नैषोऽर्थः शक्यतेऽस्माभिर्वेत्तुं भाविनि! सुव्रते!। न कुलेन न वर्णेन न शीलेन न रूपतः। न देशस्य विज्ञातः स हि चोरो मया सखि!। किन्तु शक्यं यथा कर्त्तुं बुद्धिपूर्व्वं मया सखि!। प्राप्स्यसि शृणु मे वाक्यं यथाकाममवाप्स्यसि। देवदानवयक्षाणां गन्धर्व्वोरगरक्षसाम्। ये विशिष्टाः प्रभावेण रूपेणाभिजनेन च। यथाप्रधानतः सर्व्वानालिखिष्याम्यहं सखि!। मनुष्यलोके ये चापि प्रवरा लोकविश्रुताः। सप्तरात्रेण ते भीरु! दर्शयिष्यामि तानहम्। ततो विज्ञाय पट्टस्थं भर्त्तारं प्रतिलप्स्यसे। सा चित्रलेखया प्रोक्ता उषा हृतचिकीर्षया। क्रियतामेवमित्याह चित्रलेखां सखीं प्रियाम्। ततः कुशलहस्तत्वाद्यथालेख्यं समन्ततः। इत्युक्त्वा सप्तरात्रेण कृत्वा लेख्यगतांस्तु तान्। चित्रपट्टगतान् मुख्यानानयामास शोभना। ततः प्रस्तीर्य्य पट्टं सा चित्रलेखा स्वयंकृतम्। उषायै दर्शयामास मुख्यानाञ्च विशेषतः"। "ततस्तु देव्या रूपेण चित्रलेखा वराप्सराः" तत्राध्यायादौ। भाग० १०।६२ अ०। कुम्भाण्डकन्यया चित्रलेखयैव तथा चित्रं लिखितमित्युक्तं यथा "बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता। सख्यपृच्छत् सखीमुषां कौतूहलसमन्विता" इत्युपक्रमे। "चित्रलेखोवाच व्यसनं तेऽपकर्षामि त्रिलोक्यां यदि भाव्यते। तमानेष्ये वरं यस्ते मनोहर्त्ता तमादिश। इत्युक्त्वा देवगन्धर्वसिद्धचारणपन्नगान्। दैत्यविद्याधरान् यक्षान् शूरमानकदुन्दुभिम्। व्यलिखत् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता। अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया। सोऽसावसाविति प्राह स्मयमाना महीपते!। चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी। ययौ विहायसा राजन्! द्वारकां कृष्णपालिताम्" "मन्दाक्रान्ता नपरलघुयुता चित्रलेखा" छन्दोम० उक्ते ३अष्टादशाक्षरपादके "रुद्राश्वैर्मननततमकैः कीर्त्तिता चित्रलेखेयम्" वृ० र० टी० उक्ते च ४छन्दोभेदे। "सजगा सजगा गुरुदिक्स्वरैर्भवति चित्रलेखा" वृ० र० टी० उक्ते ५छन्दोभेदे। ६व्रजाङ्गनाभेदे। "शङ्खेऽस्मिन् जगति मृगदृशां साररूपं यदासीदाकृष्येदं व्रजयुवतिसभा वेधसा

मा व्यधायि। नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य प्रीतं तस्यां नयनयुगमभूत् चित्रलेखाङ्कितायाम्" उज्ज्वलमणिः कर्म्म०। ७चित्रायां रेखायाम् स्त्री कर्मधारयात् ६तत्०। ७चित्रस्य लेखने पु०। "ऊषाऽनिरुद्धसमागममिव चित्रलेखादर्शितविचित्रसकलभुवनाकारम्। (राजकुलम्) काद०। [ जटाधरः।

**चित्रलोचना** स्त्री चित्रं लोचनमस्याः। शारिकाखगे

**चित्रवटाल** पु० चित्रवद् आ समन्तात् अलति आ+अल—अच्। पाठीनमत्स्ये (बोयाल) जटाधरः।

**चित्रवर्म्मन्** पु०१धृतराष्ट्रपुत्रभेदे "चित्राङ्गश्चित्रवर्म्मा" भा० आ० ६७अ०। चित्रं वर्म्मास्य। २चित्रकवचयुक्ते त्रि०।

**चित्रवल्लिक** पु० वल्लीव कायति कै—क पृषो० ह्रस्वः कर्म्म०। पाठीनमत्स्ये हेमच०।

**चित्रवल्ली** स्त्री० नित्यकर्म्म०। १मृगेर्वारौ २महेन्द्रवारुण्याञ्च राजनि० कर्म्म०। ३चित्रायां लतायाम्।

**चित्रवहा** स्त्री चित्रं वहति वह—अच्। भारतप्रसिद्धे नदीभेदे "करीषिणीं चित्रवहां चित्रसेनाञ्च निम्नगाम्" भा०भी० ९अ०। नानानद्युक्तौ "कपिञ्जला तथा सेव्या नदी चित्रवहा तथा" भा० आनु०१६५अ० तीर्थोक्तौ।

**चित्रवाण** पु० १धृतराष्ट्रपुत्रभेदे "चित्रबाणश्चित्रवर्म्मा सुवर्म्मा दुर्विमोचनः" भा० आ० ११०अ०। २चित्रशरयुक्ते त्रि०

**चित्रवाहन** पु० मणिपुरेश्वरे नागभेदे। "मणिपुरेश्वरं राजन्! धर्म्मज्ञं चित्रवाहनम्" भा०आ० २१५अ०।

**चित्रवीर्य्य** पु० चित्रमाश्चर्यं वीर्य्यमस्य। रक्तैरण्डे। राजनि०।

**चित्रवेगिक** पु० चित्रवेगोऽस्त्यस्य ठन्। नागभेदे "वराहको वीरणकः सुचित्रश्चित्रवेगिकः" भा० आ० ५७अ०। नागोक्तौ।

**चित्रशाला** स्त्री चित्रलेखननिर्म्माणार्थां शाला। चित्रलेखननिर्म्माणार्थायाम् शालायाम्, जालिन्याम् हेम०।

**चित्रशिखण्डिज** पु० चित्रशिखण्डिनोऽङ्गिरसो जायते जन-ड। बृहस्पतौ अमरः। चित्रशिखण्डिप्रसूतादयोऽप्यत्र।

**चित्रशिखण्डिन्** पु०चित्राः शिखण्डाः सन्त्यस्य इनि। "मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः" इत्युक्तेषु सप्तसु मुनिषु अमरः। "ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः। तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम्"। "मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। वशिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः। सप्त प्रकृतयो ह्येतास्तथा स्वायम्भुवोऽष्टमः। एताभिर्धार्य्यते लोकास्ताभ्यः शास्त्रं विनिःसृतम्" भा० शा० ३३७अ०।

**चित्रशिरस्** पु० चित्रं शिरोऽस्य। १गन्धर्व्वभेदे "महाश्रुतिश्चित्रशिरा ऊर्णायुरनघस्तथा" हरिवं० २६१अ० गन्धर्वभेदोक्तौ। २मूत्रपुरीषविषे सर्पभेदे सुश्रु० "चित्रशिरःसरावकुर्द्दिशतदारुकारिमेदकशारिकामुखामुखसन्दंश विमर्द्दिता मूत्रपुरीषविषाः" सुश्रुतः।

**चित्रशीर्षक** पु० चित्रं शीर्षमस्य कप्। कीटभेदे सुश्रुतः कीटशब्दे २०५८पृ० दृश्यम्।

**चित्रसर्प** पु० नित्यकर्म्म०। मालुधानसर्पे शब्दर०।

**चित्रसेन** पु० धृतराष्ट्रपुत्रभेदे "तेषां धृतराष्ट्रस्य पुत्राणां चत्वारः प्रधाना बभूवुः। दुर्योधनो दुःशासनो विकर्णश्चित्रसेनश्चेति" भा०आ० ९५अ०। २गन्धर्वभेदे। "चित्रसेनश्च शैलोषस्तथा चित्ररथोऽपि च। एते चान्ये च गन्धर्वा धनेश्वरमुपासते" भा० स० १०अ०। "ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयन्। गन्धर्वराजस्तान् सर्वानब्रवीत् कौरवान् प्रति" भा० व० २४०अ०। अर्जुनेन तत्पराजयकथा तत्रैव दृश्यम्। "क्रुद्धो गन्धर्वराजानं चित्रसेनमरिन्दमम्। विजिग्ये तरसा सङ्ख्ये सेनां प्राप्य सुदुर्जयाम्" भा० वि० ४९अ०। चित्रगुप्तादित्रितयान्तर्गते मर्त्यलोकविवेचके ब्रह्मपादजक्षत्रियभेदे कायस्थशब्दे १९२३पृ० दृश्यम्। ५नदीभेदे स्त्री चित्रवहाशब्दे दृश्यम्।

**चित्रहस्त** पु० चित्र आश्चर्यो हस्तः हस्तक्रिया यत्र। मल्लयुद्धाङ्गहस्तक्रियाभेदे "चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः" भा० स० २३अ०। भीमजरासन्धयोर्मल्लयुद्धवर्णने।

**चित्रा** स्त्री चित्र—अच्। १मूषिकपर्ण्यां २गोडुम्बायां ३सुभद्रायां ४दन्तिकायां ५मायायां ६सर्पभेदे ७नदीभेदे च मेदि०। ८चित्रगुप्तस्य भगिन्यां सा च नदी भूत्वा चित्रपथा नदी जाता सैव चित्रा नदी। चित्रपथाशब्दे दृश्यम् ९अप्सरोभेदे हेमच०। १०व्रजाङ्गनाभेदे उज्ज्वलमणिः। "परमप्रेष्ठमध्ये तु ललिता सविशाखिका। सचित्रा चम्पकलता तुङ्गविद्येन्दुलेखिका। रङ्गदेवी सुदेवी। चेत्यष्टौ सर्वगुणाः प्रिया" "चित्रानाम यच्छन्दोऽस्मिन् सुखयोषास्ततो यौ" वृ० टी० उक्ते पञ्चदशाक्षरपादके वर्णवृत्तभेदे। राशिचक्रस्थे १२नक्षत्रभेदे। सा च

राशिचक्रस्य १७३।२० अवधि १८६।४० पर्य्यन्तं १३।२० अंशात्मिका तत्स्वरूपादिकम् व्यक्षे नक्षत्रशब्दे ४१ ७पृ० उक्तम्। "हिमनिर्म्मुक्तयोर्योगे चित्राचन्द्रमसोरिव" रघुः। चित्रानामके चन्द्रकलत्रे १२दक्षकन्याभेदे च। १३मृगेर्वारौ १५श्वेतदूर्वायां १६मञ्जिष्ठायां राजनि०। चित्रायां जाता अण् "चित्रारेवतीरोहिणी-स्त्रीप्रत्ययेषु स्त्रियामुपसंख्यानम्" वार्त्ति० जातार्थ्येऽणो लुक्। १७चित्राजातायां स्त्रियां स्त्रीभिन्ने तु न लुक् चैत्रः इत्येव।

चित्राक्ष त्रि० चित्रमक्षि यस्य षच् समा०। चित्रनेत्रयुक्ते स्त्रियां षित्त्वात् ङीष्। सा च २शारिकाखगे त्रिका० ३धृतराष्ट्रपुत्रभेदे पु० "चित्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह" भा०आ० ६७अ०।

चित्राङ्कप पु० नित्यक० पृषो० द्रोणपुष्प्याम् शब्दार्थ चि०।

चित्राङ्ग पु० १धृतराष्ट्रपुत्रभेदे। "अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः" भा०११७अ० तत्पुत्रोक्तौ। २चित्राङ्गयुक्तमात्रे त्रि०। ३रक्तचित्रके ४सर्पभेदे ५चित्रके (चिते) राजनि०। चित्रमङ्गं यस्मात्। ६हरिताले ७मञ्जिष्ठायां ८हिङ्गुले च न० राजनि०।

चित्राङ्गद पु० शान्तनोः सत्यवत्यां जाते पुत्रभेदे। "भीष्मः खलु पितुः प्रियचिकीर्षया सत्यवतीं मातरमुदवाहयत् यामाहुर्गन्धकालीमिति तस्यां पूर्व्वं कानीनो गर्भः पराशराद् द्वैपायनोऽभवत्। तस्यामेव शान्तनोरन्यौ द्वौ पुत्रौ बभूवतुः। विचित्रवीर्य्यश्चित्राङ्गदश्च तयोरप्राप्तयौवन एव चित्राङ्गदो गन्धर्वेण हतः विचित्रवीर्य्यस्तु राजासीत्" भा० आ० ६५अ०।

ब्रह्मपादजचित्रगुप्तादिलिखनयान्तर्गते अधोलोकविचारके २सतभेदे च। कायस्थभेदं चित्राङ्गदमुपक्रम्य "कलेर्दश सहस्राणि नागलोकेश्वरोऽभव। ततस्त्रिलोकनाथत्वमिन्द्रतुल्योऽभविष्यसि" इति प्रति तं ब्राह्मणाशापमुक्ता। "तत आनन्दमनसा गतश्चित्राङ्गदस्ततम्" इत्युक्तम् आचार निर्णयतन्त्रे। ४गन्धर्वभेदे। हरिवं० १०८अ० दृश्यम्। ५अप्सरोभेदे स्त्री। "अलम्बुषा घृताची च चित्रा चित्राङ्गदा रुचिः" भा० अनु० १९०। मणिपूरेश्वरचित्रवाहनस्य कन्यायाम् ६अर्जुनकलत्रभेदे च स्त्री "अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम्। मणिपूरेश्वरं राजन्! धर्म्मज्ञं चित्रवाहनम्। तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना। तां ददर्श पुरे तस्मिन् विच-रन्तीं यदृच्छया। दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहिनीम्" भा० आ० २१५अ० "चित्राङ्गदा वरारोहामपराध्यति किञ्चन" भा० आश्व० ८१अ०।

चित्राकुट पु स्त्री चित्राकुटं सूते सू—क्विप् ६त०। सत्यवत्यां शान्तनुनन्दकलत्रभेदे राजनि०।

चित्राटीर पु० चित्रां नक्षत्रमटति चित्रं वा अटति अट—घा० ईरच्। १चन्द्रे २घण्टाकर्णे शिवानुचरभेदे ३ललिकागरक्षाङ्कितभाले च मेदि०।

चित्रादित्य पु० चित्रस्य चित्रगुप्तस्य आदित्यः तत्पूजितत्वात्। प्रभासतीर्थस्थे चित्रगुप्तस्थापिते आदित्यमूर्त्तिभेदे चित्रपथशब्दे दृश्यम्।

चित्रान्न न० नित्यकर्म्म०। चित्रौदने "दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च" यात्रा० तल्लक्षणन्तु "अजाक्षीरेण संसिक्ता यवाश्च तिलतण्डुलाः। अजाकर्णस्य रक्तेन रक्ताश्चित्रान्नसंज्ञिताः" दीपिकोक्तम्।

चित्रापूप पु० नित्यकर्म्म०। पिष्टकभेदे त्रिका०।

चित्रामघा स्त्री० कर्पासि निघण्टुः। [ राजनि०।

चित्रायस न० कर्म्म० अच् समा०। तीक्ष्णलौहे (इस्पात)।

चित्रायुध त्रि० चित्राण्यायुधान्यस्य। १आश्चर्य्यायुधयुक्ते २धृतराष्ट्रपुत्रभेदे पु० "चित्रायुधो निषङ्गी च पाशी वृन्दारकस्तथा" भा० आ० ११७अ०। "कार्ष्णिस्त्रिगर्त्तराजस्तु चित्रायुधमहारथः" भा० द्रो० २३अ०। कर्म०। आश्चर्य्यायुधे न० चित्रायुधस्तु रचितम्" भा० क० १६अ०। [ चित्रलिखितपुत्तलिकादौ।

चित्रारम्भ पु० आरभ्यते आ+रभ कर्मणि घञ् ७त०।

चित्रार्पितारम्भ त्रि० चित्रेऽर्पित आरम्भोऽस्य। चित्रलिखिते "तच्छासनात् काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे" कुमा०।

चित्रावसु पु० चित्राणि विविधानि चन्द्राकर्णाणि वसूनि यस्यां वस उ—पृ० दीर्घः। रात्रौ "रात्रिर्वै चित्रावसुः सा चित्राणि संवृह्य वसतीति" शत० ब्रा० २।३।४।१२। "चित्राणि ग्रहनक्षत्रादीनि" भा०। "चित्रावसो! स्वस्ति ते पारमशीय" यजु० ३।१८।

चित्रिक पु० चैत्रिक+पृषो०। चैत्रमासे शब्दरत्ना० चित्रा स्वार्थे क। चित्राशब्दे स्त्री।

चित्रिन् त्रि० चित्र—णिनि चित्र+अस्त्यर्थे इनि वा। १आश्चर्य्यकारके २चित्रयुक्ते च। स्त्रियां ङीप्। "अर्मिश्रिद्वासि तडजिरा चित्रिणीष्वा" ऋ० ४।३२।२

"चित्रिणीषु चित्रकर्मयुक्तासु" भा०। ३नायिकाभेदे स्त्री रतिमञ्जरी। "भवति रतिरसज्ञा नातिदीर्घा न खर्वा तिलकुसुमसुनासा स्निग्धदेहोत्पलाक्षी। कठिनघनकुचाढ्या सुन्दरी सा सुशीला सकलगुणविचित्रा चित्रिणी चित्रवक्त्रा। पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा। शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम्। शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम्। वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम्। पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी। शङ्खिनी क्षारगन्धा च मदगन्धा च हस्तिनी"।

**चित्रेश** पु० ६त०। १चन्द्रे शब्दच०। २चित्रेश्वरशिवलिङ्गे न०

**चित्रेश्वर** न० प्रभासक्षेत्रस्थे चित्रगुप्तस्थापिते शिवलिङ्गभेदे यथा "ततो गच्छेन्महादेवि! चित्रेश्वरमनुत्तमम्। चतुर्णां सप्तके तस्य स्थितमाग्नेयदक्षिणे। लिङ्गं महाप्रभावं हि सर्वपातकनाशनम्। तत्र चित्रेश्वरं पूज्य नरकात् न भवेद्भयम्। यन्नदस्थिगतं पापं चित्रोमार्जयति प्रिये! तस्मात् सर्वप्रयत्नेन चित्रेशं पूजयेत् सदा। तस्मात् पापयुतोवापि नरकं नैव पश्यति"।

**चित्रोक्ति** स्त्री चित्रा आश्चर्यकरी उक्तिः। आकाशवाण्यां त्रिका०। २चित्रकथने च।

**चित्रोपला** स्त्री ६त०। चित्र उपलोयस्याम्। १नदीभेदे। "चित्रोपलां चित्रपथां मञ्जुलाम् मञ्जुवाहिनीम्" भा० स्त्रीप० ६अ०। नदीकथने। इयं चित्रोत्पलेति पुरुषोत्तमतत्त्वे उक्ता। "नदी तत्र महापुण्या विष्णुपादविनिर्गता। चित्रोत्पलेति विख्याता सर्वपापहरा शुभा" "चित्रोत्पला महानदी" रघुनन्दनः।

**चित्रौदन** पु० नित्यकर्म०। केतुबलिरूपे चित्रान्ने चित्रान्नशब्दे लक्षणमुक्तम्। "चित्रौदनञ्च केतुभ्यः सर्वभक्ष्यैः समर्चयेत्" संस्का० त०।

**चित्र्य** त्रि० चित्र—कर्मणि यत्। पूज्ये "स्वर्य्यमा यत्योदिवि चित्र्यं रथम्" ऋ०५।६३।७। "चित्र्यं पूज्यम्" भा०।

**चिद्** अव्य०। चित्+पृषो०। १असाकल्ये चिच्छब्दार्थे। तस्य असाकल्यार्थत्वेऽपि "अथ निपाता उच्चावचेष्वर्थेषु निपतन्त्युपमार्थेऽपि" निरुक्तोक्तेः अव्ययानामनेकार्थत्वात् वा २उपमायाम्। "दधि चिदित्युपमार्थे" निरु०। ३निन्दायाम् "कुल्माषांश्चिदाहरेदिति कुत्सिते" निरु०। "चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः" पा० चट्सु परेषु तिङन्तं नानुदात्तम्। "देवः पचति चित्" सि० कौ० "किंवृत्तं च चिदुत्तरम्" पा०। "अविद्यमानपूर्वं चिदुत्तरं यत् किंवृत्तं तद्युक्तं तिङन्तं नानुदात्तम्"। "विभक्त्यन्तं डतरडतमान्तं किमोरूपं किंवृत्तम्" सि० कौ०।

**चिदाकाश** पु० न०। चिद् आकाशमिव निर्लेपत्वात् सर्वाधारत्वाच्च। आकाशवन्निर्लेपे शुद्धे ब्रह्मणि।

**चिदात्मन्** पु० चित् चैतन्यमात्मा स्वरूपमस्य। चैतन्यस्वरूपे परात्मनि प्रत्यगात्मनि परपुरुषे। "एतद्रूपं भगवतोह्यरूपस्य चिदात्मनः" भाग० १।३।३५। श्लोकः

**चिदाभास** पु० चित आभासः प्रतिबिम्बः। बुद्ध्यात्मप्रतिबिम्बे जीवे "बुद्धिवृत्तिचिदाभासाविति वेदान्तकाः। चित्रदीपशब्दे दृश्यम्। [३हृदयालौ हेमच०।

**चिद्रूप** पु० चिदेव रूपमस्य। १आत्मनि, २स्फूर्त्तिमति च।

**चिन्तन** न० चिति—भावे ल्युट्। अनुध्याने "परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्" मनुः। युच्। चिन्तनाप्यत्र स्त्री।

**चिन्ता** स्त्री चिति—भावे अ। १अनुध्याने सा० द० उक्ते २व्यभिचारिगुणभेदे च तत्र "धृतिचपलताग्लानिश्चिन्ता वितर्काः" व्यभिचारिणो विभज्य "ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्" सा० द० लक्षितम्। "चिन्ता ज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः" चाणक्यम्। "चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः" गीता। "धर्मक्रियात्मचिन्ता च सात्त्विकगुणलक्षणम्" मनुः। ३दर्शनसंभोगभावनाभेदे रसमञ्ज०।

**चिन्तामणि** पु० चिन्तायां सर्वकामदोमणिः शा० त०। चिन्तितार्थप्रदे मणिभेदे। "चिन्तामणींनुदारांश्च चिन्तिते सर्वकामदान्" हरिवं० १५२अ०। "सामर्थ्यसम्पादितवाञ्छितार्थश्चिन्तामणिः स्यान्न कथं हनूमान्" भट्टिः। २सर्वकामदे परमेश्वरे च "आयुरारोग्यमैश्वर्य्यं भोगांश्चैवानुषङ्गिकान्। ददाति ध्यायतां नित्यम् सर्वकामप्रदो हरिः" इत्युक्तेस्तस्य तथात्वम्। ३मन्त्रविशेषे "सहजस्थानगो भौमो भाग्यस्थश्च वृहस्पतिः। चिन्तामणिसमाख्योऽयं यातुः संकल्पपूरकः" ज्यो० उक्ते ४यात्रायोगभेदे ५बुद्धे त्रिका०। ६स्पर्शमणौ "यथा चिन्तामणिं स्पृष्ट्वा लौहं काञ्चनतां व्रजेत्"। पद्मोत्त०ख० कपिलगृहप्रादुर्भूते तदीयचिन्तामणिहारकगणदैत्यनाशके ७गणेशभेदे तत्कथा "गणं हत्वा महावीर्यं चिन्तामणिस्तया-

उद्भूतः चिन्तामणिरिति ख्यातं तव नाम भविष्यति। अतश्चिन्तामणिं नाथ! त्वमेव स्वीकुरु प्रभो"!। "मुनिना कपिलेनासौ प्रार्थितोऽभिजितोऽपि च। मणिश्चिन्तामणिस्त्वया शुशुभे स विनायकः। चिन्तामणिरिति ख्यातिस्ततोऽपि परमां दधौ। कपिलस्य गृहे जातः कपिलाख्यामतो ययौ" स्क० पु० गणपतिकल्पे

**चिन्तामणिविनायक** पु० काशीस्थे गणपतिमूर्त्तिभेदे "चतुर्थावरणे काश्यां भक्तविघ्नविनायकाः। दृष्ट्वा हृष्टचेतोभिः स्रष्टव्यौ विनायकाः" इत्युपक्रमे "क्षेत्रस्या दक्षिग्दिग्भागे चिन्तामणिविनायकः। भक्तचिन्तामणिः साक्षात् चिन्तितार्थसमर्पकः" काशी० ५० अ०।

**चिन्तावेश्मन्** न० ६त०। यन्त्रणागृहे।

**चिन्ति** पु० चिति—इन्। देशभेदे तस्य सुराष्ट्रेण सह द्वन्द्वे कार्त्तकौजपा० पूर्वपदप्रकृतिस्वरः चिन्तिसुराष्ट्राः।

**चिन्तिडी** स्त्री तिन्तिडी+पृषो०। तिन्तिडीवृक्षे द्विरूपको०।

**चिन्तित** त्रि० चिति—कर्म्मणि क्त। चिन्ताकर्म्मणि "सख्या सुखं समुपयास्यसि चिन्तितानि" किरा०। कर्त्तरि क्त। २चिन्तायुक्ते ३तद्वामिकायां स्त्रियां स्त्री। भावे क्त। ४चिन्तायाम् न०।

**चिन्तिति** स्त्री० चिति—क्तिन् वा० इट् णिलोपश्च। चिन्तायाम् शब्दरत्ना०। [त्रिका०।

**चिन्तिया** स्त्री० चिन्ता+स्वार्थे वा० घ। चिन्तायां

**चिन्त्य** त्रि० चिति—कर्म्मणि यत्। चिन्तनीये "केषु केषु च भावेषु चिन्त्योऽसि भगवन्! मया" गीता। "अयं हि सर्वधर्म्माणां धर्म्मश्चिन्त्यतमोमतः" भा०आनु० ४४अ०।

**चिन्त्यद्योत** पु० चिन्त्यःसन् द्योतते द्युत—अच्। देवभेदे। "गणा देवानामूष्मपाः सोमपाश्च लोकाः तुयामास्तुषिता ब्रह्मकायाः। आभासुरा गन्धपा दृष्टिपाश्च वाचा विरुद्धाश्च मनोविरुद्धाः; शुद्धाश्च निर्माणरताश्च देवाः स्पर्शाशना दर्शपा आज्यपाश्च। चिन्त्यद्योता ये च देवेषु मुख्याये चाप्यन्यादेवतास्ताजमीढ!। सुपर्णगन्धर्वपिशाचदानवा यक्षास्तथा चारणपन्नगाश्च" भा०अनु०१८अ०।

**चिपिट** पु० चि—पिटच् किच्च। (चिड़ा) ख्याते पृथुके हेमच०: तत्करणप्रकारादि भावप्र० उक्तं यथा "शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः। कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि। शालयो यवनालाद्याश्चिपिटा पुष्टिवर्द्धनाः"। अस्य भक्ष्याभक्ष्यत्वं यथाह्निः स्विन्नमन्नं पृथुकं शुद्धं देयविशेषके। नात्यन्तशस्तं विप्राणां भोजने च निवेदने। अभक्ष्यं तत् यतीनाञ्च विधवाब्रह्मचारिणाम्" ब्रह्मवै० पु०। "नासिकाया नते इनच् पिटच् चिकचि च" पा० वार्त्ति० पिटच् प्रकृतेश्चिः। २नतनासिकायां (खांदा) ३तद्वति त्रि० (चेपटा) ४ख्याते पदार्थे "करतलपीडनचिपिटीकृतश्रवणपुटेन" काद०। "उन्नतो मांसलोऽङ्गुष्ठो वर्त्तुलोऽतुलभोगदः। वक्रोह्रस्वश्च चिपिटः सुखसौभाग्यभञ्जकः। चिपिटीभिर्भवेद्दासी" इति काशी० ख० ३७। प्रान्ते अङ्गुल्यानिपीडनेन ५नेत्रव्याकुलतायाम्। "अस्ति द्विचन्द्रमतिरस्ति जनस्य तत्र भ्रान्तौ दृगन्तचिपिटीकरणादिरादिः" नैष०। "दृगन्तचिपिटीकरणं नेत्रान्ताकुलीकरणम्" मल्लि०। अङ्गुल्या कि नेत्रप्रान्तनिपीडने एकपदार्थस्य द्विधा भानं लोकप्रसिद्धम्। ६गुड्डाशिनीलते स्त्री राजनि०। पृषो० चिपटोऽपि पृथुके हेमच०। स्वार्थे क। चिपिटक पृथुके अमर।

**चिपिटनासिक** पु० चिपिटा नासिका यत्र। १देशभेदे स च देशः "उत्तरतः कैलासः" इत्युपक्रमे "केशधरचिपिट नासिकदासेरकवाटधानाः" वृ०स० १४०अ० कूर्मविभागे उत्तरस्यामुक्तः। सोऽभिजनोऽस्य अण्, तद्राजत्वात् वा बहुत्वे लुक्। २तद्देशवासिषु ३तन्नृपेषु च ब० व०।

**चिपट** पु० चिपिट+पृषो०। पृथुके हृदः।

**चिप्प** पु० "नखमांसमधिष्ठाय वातं पित्तं च देहिनाम्। करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्" भाव० उक्ते नखरोगभेदे। (आङ्गुल हाड़ा)

**चि(क्कि)प्पिका** पु० रात्रिचरजन्तुभेदे "लोमाशिकाविह च चि(क्कि)प्पिकाख्यौ वल्गुल्युलूकौ शशकश्च रात्रौ" ह० स० ८८अ०। "सर्वे स्वकालातिक्रमचारिणः स्वदेशस्य नाशाय न्रपान्तदा वा" तस्य दिवाचारेऽनिष्टफलकमाह "नानाविधानि विकृतानि हि चि(क्कि)प्पिकायास्स्वशुभः कुलकुलु न शुभास्तु शेषाः" वृ० स० ८८अ०

**चिप्य** पु० स्मृतोक्ते ऊर्मिभेदे ऊर्मिशब्दे दृश्यम्।

**चिमि** पु० चि—वा० मिक्। १शुकखगे शब्दरत्ना०। २पट्टकक्षे (पाटशाक) शब्दभाला। स्वार्थे क तत्रार्थे।

**चिर** न० चि—रक्। १दीर्घकाले। २तद्वर्त्तिनि पदार्थे त्रि० लभादौ (८) त्रिकाले गणे शब्दार्थचि० "दीर्घसूत्रो चिरक्रियः" अमरः। चिरजीवी चिरकारी चिरकालादि।

**चिरकारिन्** त्रि० चिरेण करोति कृ—णिनि। १चिरेण कारके कर्त्तरि दीर्घसूत्रे। २गौतमस्य पुत्रभेदे पु०।

नव्यादिके (15) १विकले गणे शब्दार्थचि० । २लक्षणे च "चक्रं प्रजाः स्वाः सनिमेषचिह्नाः" "स्वनामचिह्नं निचखान सायकम्" रघुः ।

**चिह्नकारिन्** त्रि० चिह्नं करोति कृ–णिनि । १चिह्नकर्त्तरि २घोरदर्शने त्रिषः स्त्रियां ङीप् ।

**चिह्नधारिन्** त्रि० चिह्नं धारयति धारि–णिनि । १चिह्नयुक्ते स्त्रियां ङीप् सा च २शग्रामालतायां शब्दच० ।

**चिह्नित** त्रि० चिह्न–कर्म्मणि क्त । १अङ्किते २लाञ्छिते । "दिवा चरेयुः कार्य्यार्थं चिह्निताः राजशासनैः" मनुः ।

**चिह्लु** पु० चिह्न+पृषो० (गाम्बारी) पर्व्वतप्रसिद्धे वृक्षभेदे शब्दार्थचि० । स्वार्थे क । तत्रार्थे "चिह्लुकोयातनिकारी अमृतोत्पाद्यपष्टकत् । आग्नेयो विषहृत्तस्य फलं मतूत्सनिसूदनम्" भावप्र० ।

**चीक** मर्षणे वा चु० उभ० पक्ष स्वा० पर० सक० सेट् । चीकयति ते चीकति अचीचिकत् त अचीकीत् ।

**चीचीकुटि** अव्य० शारिकादिशब्दानुकरणे "चीचीकूटीति वाशन्ते शारिका दृष्णिवेश्मसु" भा० मौ० २अ० । "चीचीकूटीति वाशन्तं त्वामद्य न शृणोमि किम्" हरिव० २०अ० राजनि० ।

**चीडा** स्त्री चिड–पृषो० । स्वनामख्याते गन्धद्रव्ये ।

**चीन** पु० चि-नक् पृषो०दीर्घः । "काश्मीरं तु समारभ्य कामरूपात्तु पश्चिमे । भोटान्तदेशोदेशिशि । मानसेशाच्च दक्षिणे । मानसेशाद्दूत्तपूर्व्वे चीनदेशः प्रकीर्त्तितः" शक्तिसङ्गमतन्त्रोक्ते २देशभेदे । सोऽभिजनोऽस्य अणः तद्राजात्वात् वा बहुत्वे लुक् । ३तद्देशवासिषु तत्रार्थे च ब० व० । "वाजिनां च सहस्राणि चीनदेशोद्भवानि च" भा०उ० ८७अ० । अयञ्च देशः बृ० सं० १४अ० कूर्म्मविभागे ऐशान्यामुक्तः । ऐशान्यामित्युपक्रमे "वनराजकिरातचीनकौणिन्दाः" "यवनाश्चीनकाम्बोजा दारुणाम्लेच्छजातयः" भा० भी० ६अ० जनपदोक्तौ । तद्देशवासिनां क्रियालोपात् शनैः वृषलत्वं गताः यथाह मनुः "शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गता लोके ब्राह्मणादर्शनेन च । पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः । पारदाः पह्लवाश्चीनाः किरातादरदाःखसाः" । ४तद्देशजे वस्त्रभेदे च "कार्म्माटीचीनचीनस्तनवसनदशान्दोलनस्पन्दमन्दः" उद्भटः । ५व्रीहिभेदे अष्टादशधान्यशब्दे ५२३पृ० दृश्यम् । "चीनकः कङ्गुभेदोऽस्ति स ज्ञेयः कङ्गुवद्गुणैः" भावप्र० । ६सूत्रे ७मृगभेदे च

मेदि० । ८पताकायां न० त्रिका० । ६सीसके न० रत्नमाला तन्त्रोक्ते १०तद्देशवासिजनानामाचारभेदे पु० पृषो० अस्य स्वत्वमपि वर्त्तते । ११चीनकर्पूरे राजनि० ।

**चीनकर्पूर** पु० चीनोपपदः कर्पूरः । कर्पूरभेदे राजनि० ।

**चीनज** न० चीने तद्देशे जायते जन–ड । १तीक्ष्णलौहे राजनि० । २चीनजातमात्रे त्रि० ।

**चीनपिष्ट** न० चीनस्य सीसकस्य पिष्टं चूर्णं इत० (चीनेर सिन्दूर) १सिन्दूरभेदे हेमच० । चीनं पिष्टमिव । २सीसके राजनि० ।

**चीनवङ्ग** न० चीनभवं वङ्गम् । सीसके राजनि० ।

**चीनांशुक** न० कर्म्म० । चीनाख्ये पट्टवस्त्रभेदे "चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य" कुमा० । "चीनांशुकमिव पीनस्तनजघनायाः कुलीनायाः" उद्भटः ।

**चीनाक** पु० चीनं तदाकारं स कति अक–अण् । (चीनिया) कर्पूरभेदे । "चीनाकसंज्ञः कर्पूरःकफक्षयकरः स्मृतः । कुष्ठकृमिविषहरस्तथा तिक्तरसस्तु सः" भावप्र० ।

**चीनाककर्कटी** स्त्री चीनमिव स्वादुः कर्कटी पृषो० दीर्घः । १राजकर्कट्यां चित्रकूटप्रसिद्धकर्कटीभेदे राजनि० ।

**चीभ** प्रशंसायां भ्वा०आत्म० सक० सेट् । चीभते अचीभिष्ट चिचीभे ऋदित् अचिचीभत् त ।

**चीर** न० चि–क्रन् दीर्घश्च । १वस्त्रखण्डे मेदि० । (कानि) "चीराणि किं पथि न सन्ति दिशन्ति भिक्षाम्" शान्तिश० । २वृक्षत्वचि सुभूतिः । ३गोस्तने ४वस्त्रभेदे ५रेखा लक्षणभेदे मेदि० । ६वस्त्रमात्रे ७चूडायां ८सीसके हेमच० । ६लिखनभेदे १०वल्कले च शब्दार्थचि० "तं कदाचित् तपस्यन्तमार्द्र चीरजटाधरम्" भा० व० १८७अ० । "चेन्दचीरपरिग्रहाः" कुमा० । स्वार्थे क । चीरकशब्दार्थे

**चीरक** न० चीर+संज्ञायाम् कन् । त्रिकारलेखने त्रिका० ।

**चीरपत्रिका** स्त्री चीरमिव पत्रमस्याः कप् अत इत्त्वम् । चञ्चुशाके राजनि० ।

**चीरपर्ण** पु० चीरमिव पर्णमस्य । शालवृक्षे राजनि० ।

**चीरनिवसन** पु० चीरं निवसनं वस्त्रं यस्य । "ऐशान्यामित्युपक्रमे "पौरवचीरनिवसनत्रिनेत्रमुञ्जाद्रिगन्धर्वाः" बृ०सं०१४ उक्ते १देशभेदे २तद्देशवासिषु ३तत्र पेषु ब०व० । ४चीरधारिणि त्रि० [सर्पजाः" सुश्रुतः ।

**चीरल्लि** पु० । पक्षिभेदे "धारयेदपि जिह्वाश्च चापचीरल्लि

**चीरि** स्त्री चि–बा० क्रि दीर्घश्च । १नेत्रांशुके शब्दरत्ना० । २झिल्लिकायां ३कच्छटिकायां शब्दार्थचि०

**चीरिका** स्त्री चीरीति कायति कै—क । झिल्लिकायां हेमच० ।

**चीरिणी** स्त्री वैवस्वतमनोस्तपस्यास्थानसमीपस्थे वदरीक्षेत्रस्थे नदीभेदे । "जङ्घ वाहुर्विशालायां वदर्यां स (वैवस्वतः) नराधिपः । इत्युपक्रमे "तं कदाचित् तपस्यन्तमार्द्रचीर जटाधरम् । चीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत्" भा० व० १८७अ० । [पालङ्क्यशाके भावप्र० ।

**चीरितच्छदा** स्त्री चीरवदाचरितः छदो दलं यस्याः ।

**चीरीवाक** पु० चीरीतिशब्दो वाकः वाचकोऽस्य । कीटभेदे "चीरीवाकस्तु लवणं बलाका शकुनिर्दधि" मनुना लवणहरणकर्मविपाके तद्योनिरुक्ता "भिल्ली वस्त्रं श्वा रथन्तु चीरी लवणहारकः" याज्ञ० ऐकवाक्यात् अस्य चीरीसमानार्थकता ज्ञेया ।

**चीरुक** स्त्री चीति—रौति—रुशब्दे वा० क । १झिल्लिकायां शब्दार्थचि० । सा साहचर्येणास्त्यस्य अच् । २फल-प्रधान वृक्षभेदे न० ।

**चीर्ण** त्रि० चर नक वृषो० अत इत्त्वम् । १कृते २शीलिते, ३सम्पादिते "चीर्णं व्रतानपि सदा कृतसंहितानिमान्" याज्ञ० । ४विदारिते च । | स्वरूते च मेदि० ।

**चीर्णपर्ण** त्रि० चीर्णं विदारितं पर्णमस्य । १खर्जूरवृक्षे २नि-

**चीलिका** स्त्री चीति शब्दं लाति ला—क टापि अत इत्त्वम् चीरिका+रस्य लो वा । झिल्लिकायां शब्दरत्ना० ।

**चील्लक** पु० चीदिति शब्दं लक्षति लक्ष—अच् पृषो० । झिल्लिकायां शब्दर० ।

**चीव** यहणे संवृतौ च भ्वा० उभ० सक० सेट् । चीवति ते अचीवीत् अचीविष्ट । चिचीव चिचीवे क्वदित् । अचि-चीवत् त ।

**चीव** दीप्तौ चुरा०उभ०सक०सेट् । चीवयति ते अचीचिवत् त

**चीवर** न० चि—वरच् नि० दीर्घः चीव—अच वा । भिक्षु प्रावरणे उज्ज्वलद० "कौपिनाच्छादनं यावत्तावदिच्छेच्च चीवरम्" भा० आ० ६१अ० । "प्रेतचीवरवसा स्वनो-ग्रया" रघुः । "पुत्रभाण्डचीवराणिण्ड्" पा० चीव-रादर्जने परिधाने च" वार्त्ति० चीवराणि अर्जयति परिधत्ते वा संचीवरयते भिक्षुः सि० कौ० । [त्रिका० ।

**चीवरिन्** पु० चीवरमस्त्यस्य इनि । १भिक्षुके २बुद्धभिक्षुके

**चुक्क** पीडने चु० उभ०सक० सेट् । चुक्कयति ते अचुचुक्कत् त ।

**चुक्कार** पु० चुक्क—भावे—अच् चुक्कं पीडनमाराति सम्यक्-ददाति आ+रा—क । सिंहनादे त्रिका० ।

**चुक्र** न० चक-रक् अत उत्त्वञ्च । १अम्लरसे २अम्लवेतसे पु० विश्वः ३शाकभेदे (चुकापालङ्क) ४शुक्तभेदे च शब्दार्थचि० । "चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परम् । शूलगुल्मविबन्धामवातश्लेष्महरम् परम् । वमिहृष्णास्यवैरस्यहृत् पीडावर्क्षमान्द्यहृत्" भावप्र० । ५काञ्जिकभेदे । ६रसाम्ले ७सन्धानविशेषे शब्दार्थचि० "यन्मस्त्वादि शुचौ भाण्डे सगुडं क्षौद्रकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते । [illegible] गुडभक्ष्यारनालमस्तुकमादिभिः" वैद्यकपरिभाषा । तत-[illegible] भाव इमनिच् । चुक्रिमन् अम्लत्वे पु० । स्वार्थे क संज्ञायां वा कन् । चुक्रक तत्रार्थे । (चुकापालङ्) शाके न० ।

**चुक्रफल** न० चुक्रं फलति फल—अच् । वृक्षाम्ले राजनि० ।

**चुक्रवास्तुक** न० चुक्रं वास्तुकमिव । (चुकपालङ्) शाकभेदे राजनि० । [ राजनि० ।

**चुक्रवेधक** न० चुक्रमिव विध्यति विध—ण्वुल् । काञ्जिकभेदे

**चुक्रा** स्त्री चक—रक् अत उत्त्वम् । १चाङ्गेर्याम् (आमरुल) मेदि० । २तिन्तिड्यां शब्दर० । स्वार्थे क चुक्रिका । अम्ल-लोणिकायाम् (आमरुल) अमरः ।

**चुक्राम्ल** न० चुक्रमिवाम्लम् । १वृक्षाम्ले (चुकापालङ्) २शाके ३अम्ललोणिकायां (आमरुल्) स्त्री राजनि० ।

**चुक्री** स्त्री चुक्र+गौरा० ङीप् । चाङ्गेर्याम् "चुक्री स्वल्प-तरा स्वाद्वी वातघ्नी कफपित्तकृत् । रुच्या लघुतरा पाके हृल्लाकेनातिरोचनी" भावप्र० ।

**चुण्टा** स्त्री चण्ट वधे वा० स पृषो० । १हिंसायां [illegible] शालमस्य कर्त्तरि ण । चौण्ट हिंसाशीले त्रि० "शिलाकीर्णं स्वयं श्वभ्रं नीलाञ्जनसमोदकम् । लतावि-तानसंछन्नं चौण्ट(ण्ड)ण्डमित्यभिधीयते । अश्मादिभिरु-द्धं यत् चु(ण्डे)ण्टीति च परे जगुः । तत्प्रत्युदकं चौ-(ण्डम्)ण्टं सनिभिःसमुदाहृतम्" भावप्र० उक्ते जलाधारभेदे । सुश्रुतेन तज्जलस्य चौण्टसंज्ञोक्ता कच्चौ-ण्टसलिलक्षालित योनिम्" इति सुश्रुते निदानस्थाने चोलेति पाठस्तु लिपिकरप्रमादकृतः भावप्र० बहुषु पुस्तकेषु चौण्डमिति पाठः युक्त एव त्रिकाण्डे चुण्टा-शब्दस्य उदकूपजलाशयार्थकत्वात् तत्स्थजलस्यैव चौण्ड-संज्ञौचित्यात्

**चुचु(चू)क** पु० न० चुचु इत्यव्यक्तशब्दं कायति पीयमानं कै—क । १कुचस्याग्रे अमरः तत्र चूचुकमिति । दीर्घ-

